# दोषपरिहाराष्टकम्

अन्यस्य दोषगणनाकुतुकं ममैतदाविष्करोति नियतं मयि दोषवत्त्वम् ।
दोषः पुनर्मयि न चेदखिले सतीशे  दोषग्रहः कथमुदेतु ममेश तस्मिन् ॥ १॥

एषा व्यथेतिरकृतेति ममेश तस्मिन् कोपो यदि स्वपरकाममुखप्रसूता ।
सेयं व्यथेति मयि मे न कथन्नु कोपः स्वस्य व्यथा स्वदुरितप्रभवा हि सर्वा ॥ २॥

कामभृत्यखिलदोषनिधेर्ममैष  मय्याह दोषमिति को नु दुराग्रहोऽस्मिन् ।
हेयत्वमालपति योऽयमलं न केन वार्योऽथ सत्ववति सोऽयमसत्किमाह ॥ ३॥

यः संश्रितः स्वहित धीर्व्यसनातुरस्तद्दोषस्य तं प्रति वचोऽस्तु तदन्यदोषं ।
यद्वच्मि तन्मम न किं क्षतये स्वदोषचिन्तैव मे तदपनोदफलोचितातः ॥ ४॥

दुर्वस्तुनेव मलिनीक्रियते तदन्यदोषग्रहादहह किं न निवर्तितव्यम् ॥ ५॥

निर्दोषभावमितरस्य सदोषभावं स्वस्यापि संविदधती परदोषधीर्मे ।
आस्तामियं तदितरा तु परार्तिमात्रहेतुर्व्यनक्तु न कथं मम तुच्छभावम्॥ ६॥

पद्मादिसौरभ इव भ्रमरस्य हर्षं हित्वान्यदीयसुगुणे पुनरन्यदोषे ।
हर्षो दुरर्थ इव गेहकिटेः किमास्ते हा मे कदेश कृपया विगलेत्स एषः ॥ ७॥

दोषे स्वभाजि मतिकौशलमन्यभाजि मौढ्यं गणेऽन्यजुषि हर्षभरः स्वभाजि ।
अस्तप्रसक्तिरखिलेषु दयात्युदारवृत्योर्जितो मम कदाऽस्तु हरानुरागः ॥ ८॥

॥ इति श्रीश्रीधर अय्यावालकृत दोषपरिहाराष्टकं सम्पूर्णम् ॥